॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

तिङन्ते

## चुरादयः, णिजन्तश्च

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**


डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

31.04.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः छिद्यन्ते सर्वसंशयाः



# चुरादिगणे धातवः

## णिजन्तत्वादुभयपदिनः

चुँर स्तेये ॥ १ ॥

कथ वाक्यप्रबन्धे ॥ २ ॥ (अदन्तः)

गण संख्याने ॥ ३ ॥ (अदन्तः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# णिजन्तत्वादुभयपदिधातुषु ‘चुर्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते चुरादयः)

❑ चुरँ स्तेये॥ १॥

❖ णिच्-प्रत्यय-विधायकं विधिसूत्रम्—

सूत्रम्— सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्॥

अर्थः— (एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः (गणसूत्रम्—) ‘प्रातिपदिकाद्धात्वर्थे (बहुलमिष्टवच्च)’ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु)[१] स्वार्थे। ‘पुगन्ते..’ति गुणः। ‘सनाद्यन्ता..’ इति धातुत्वम्। तिप्शबादि। गुणायादेशौ। चोरयति॥

गणसूत्रम्— ‘प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च

अर्थः— धात्वर्थे प्रातिपदिकात् बहुलं णिच्प्रत्ययः। तस्य णिच्प्रत्ययस्य ‘इष्टन्’प्रत्ययवत् सर्वकार्याणि स्युः।

चुर् + णिच्
चुर् + इ
चोरि

चोरि + लँट्
चोरि अ + ति
चोरे अ + ति
चोर् अय् अ + ति
चोरयति

१.कोष्ठकान्तर्गतः पाठः चेन्नैसंस्करणे नास्ति।

स्वं= प्रकृतिः, तस्यार्थः स्वार्थः।

प्रपञ्चार्थम्= शिष्यबुद्धिवैशद्यर्थम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# णिजन्तत्वादुभयपदिधातुषु 'चुर्' धातोः प्रक्रिया



❖ आत्मनेपद-विधायकं विधिसूत्रम्—

**सूत्रम्— णिचश्च (१,३.७४)**

**अर्थः—** णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। चोरयते। चोरयाञ्चक्रे[१], चोरयामास। चोरयिता। चोर्यात्, चोरयिषीष्ट। 'णिश्री..'ति चङ्। 'णौ चङी..'ति ह्रस्वः। 'चङी'ति द्वित्वम्। हलादिः शेषः। 'दीर्घो लघो'रित्यभ्यासस्य दीर्घः। अचूचुरत्, अचूचुरत॥

चोरि + लुँङ्
चोरि च्लिँ + ति
चोरि चङ् + त् (णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्)
चोर् अ + त् (णेरनिटि)
चुर् अ + त् (णौ चङ्युपधाया ह्रस्वः)
चुर् चुर् अ + त् (चङि)
चु चुर् अ + त् (हलादिशेषः)
चू चुर् अ + त् (दीर्घो लघोः)
अचूचुरत्

१.अयं पाठः चेन्नैसंस्करणस्थः।

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# णिजन्तत्वादुभयपदिधातुषु 'कथ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते चुरादयः)

❑ **कथ वाक्यप्रबन्धे॥ २॥ अल्लोपः॥**

❖ स्थानिवद्भाव-विधायकं विधिसूत्रम्—

**सूत्रम्— अचः परस्मिन्पूर्वविधौ (१,१.५७)**

**अर्थः—** ~~अल्विध्यर्थमिदम्।~~ परनिमित्तोऽजादेशः= पर को निमित्त मानकर 'अच्' के ही स्थान पर हुआ आदेश **स्थानिवत् स्यात्**= स्थानी की तरह होता है, **स्थानिभूतादचः**= स्थानिवद्भाव हुए अच् से **पूर्वत्वेन दृष्टस्य**= पूर्व में देखे गये (व्यवहिताव्यवहित) वर्ण के स्थान पर **विधौ**= कार्य के **कर्तव्ये**= किए जाने पर।

इति स्थानिवत्वान्नोपधावृद्धिः। कथयति।

अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत्॥

✓ स्थानिनि सति यत्कार्यं भवति तत्कार्यम् आदेशे सत्यपि स्यात्। (सत्)

✓ स्थानिनि सति यत्कार्यं न भवति तत्कार्यम् तदादेशेऽपि न स्यात्। (असत्)

कथ + णिच्

कथ् + इ (अतो लोपः)

(अत उपधाया)- वृद्धिप्राप्ते

कथि

कथि + लँट्

कथि अ + ति

कथे अ + ति

कथ् अय् अ + ति

कथयति

कथि अ + त् (णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्)

कथ् अ + त् (णेरनिटि)

कथ् कथ् अ + त्

च कथ् अ + त्

अचकथत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# णिजन्तत्वादुभयपदिधातुषु 'गण' धातोः प्रक्रिया



❑ गण सङ्ख्याने ॥ ३ ॥ गणयति ॥

❑ ईकार-अदादेश-विधायकं विधिसूत्रम्—

सूत्रम्— ई च गणः (७,४.९७)

अर्थः— गणयतेरभ्यासस्य ई स्याच्चङ्परे णौ चादत् । अजीगणत्, अजगणत् ॥

॥ इति चुरादयः ॥

1. गणयतेरभ्यासस्य ईत्स्याच्चादङ्परे णौ । (चेन्नै-निर्णसागरादिषु संस्करणेष्वयं पाठः) ।
2. मैथिलादिसंस्करणे तु— गणयतेरभ्यासस्य ईत्स्याच्चङ्परे णौ । इति पाठः ।

गण + णिच्
गण् + इ (अतो लोपः)
(अत उपधाया)- वृद्धिप्राप्ते
गणि

गणि + लँट्
गणि अ + ति
गणे अ + ति
गण् अय् अ + ति
गणयति

गणि अ + त् (णिश्रिद्रुस्रुभ्यः कर्तरि चङ्)
गण् अ + त् (णेरनिटि)
गण् गण् अ + त्
ग गण् अ + त्
जी गण् अ + त्
अजीगणत्

ज गण् अ + त्
अज गण् अ + त्
अजगणत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आतिदेशिकधातुप्रकरणे

## लघुसिद्धान्तकौमुद्याम् (तिङन्ते ण्यन्तप्रक्रिया)

# णि+अन्त= ण्यन्तप्रक्रिया
# णिच्+अन्त= णिजन्तप्रक्रिया

❖ कर्तृसञ्ज्ञा-विधायकं सूत्रम्—

**सूत्रम्— स्वतन्त्रः कर्ता (१,४.५४)**

**अर्थः—** (पाकादिरूपायां) क्रियायां स्वातन्त्र्येण= मुख्यतया (वक्त्रा) विवक्षितो= कहा जाने वाला अर्थः कर्ता स्यात्॥

**विवक्षा च—** 'इयं क्रिया अनेनैव साधनीया'। तदानीं स पदार्थः कर्तृसञ्ज्ञकः। अत एव 'अग्निना/स्थाल्यां पचति' इत्यनयोः करणाधिकरणयोः स्थाने 'अग्निः पचति,स्थाली पचति' इत्यादि कर्तृप्रयोगाः भवन्ति।



| शुद्धधातुः (भूवादयो धातवः) | आतिदेशिकधातुः (णिजन्तधातुः) (सनाद्यन्ताः धातवः) |
|---|---|
| पच् =पचति पकाता है। | पाचि =पाचयति/ते पकवाता है। |
| लिख् =लिखति | लेखि =लेखयति/ते |
| पठ् =पठति | पाठि =पाठयति/ते |
| गम् =गच्छति | गामि =गमयति/ते |
| भाष् =भाषते | भाषि = भाषयति/ते |
| रुच् =रोचते | रोचि =रोचयति/ ते |
| श्रु =शृणोति | श्रावि =श्रावयति/ते |

वस्तुतस्दनिर्देश्यं नहि वस्तुव्यवस्थितम्। 'स्थाल्या पच्यत' इत्येषा विवक्षा दृश्यते यतः।

# (आतिदेशिकधातुप्रकरणे) ण्यन्तप्रक्रिया



❖ हेतु-कर्तृसञ्ज्ञा-विधायकं सूत्रम्—

**सूत्रम्— तत्प्रयोजको हेतुश्च (१,४.५५)**

**अर्थः—कर्तुः प्रयोजको= प्रेरकः हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्॥**

✓ यदा कश्चित् कस्मैचित्कार्याय कञ्चिद् वदति तदा वक्ता— प्रयोजकः (कर्ता-१)।

✓ यश्च कार्यं कर्तुमुक्तः सः— प्रयोज्यः (कर्ता-२)।






○ बालः मिष्टान्नं खादति।

○ पिता बालेन मिष्टान्नं खादयति।

➢ ण्यन्तेऽकर्मकोऽपि सकर्मको भवति। यथा— शिशुः शेते। माता शिशुं शाययति।

➢ सकर्मकधातूनाम् अण्यन्तावस्थायां यः कर्ता सः ण्यन्तावस्थायां प्रायः तृतीयान्तो भवति।

गतिः-- रामो नगरं गच्छति। श्यामो रामं नगरं गमयति।
अशनम्-- बालोऽन्नं भुङ्क्ते। माता बालम् अन्नं भोजयति।
शब्दकर्मकः—वटुः वेदमधीते।गुरुर्वटुं वेदम् अध्यापयति।

गतिबुद्ध्यशनार्थेषु शब्दकर्मस्वकर्मसु।
अहेतौ यो भवेत् कर्ता स हेतौ कर्म जायते॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

(आतिदेशिकधातुप्रकरणे णिजन्ते)

# भूधातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते ण्यन्तप्रक्रिया)

- ✓ धात्वर्थे प्रयोजकनिष्ठः प्रेरणांशो ‘णिच्’प्रत्ययेन अभिव्यक्तो भवति।
- ✓ प्रेरणांशं प्रकटनाय शतृप्रत्ययान्तयुक्तं विग्रहवाक्यमपि अत्र णिजन्ते प्रयुङ्क्ते। यथा— भवन्तं= होते हुए को प्रेरयति। गच्छन्तं= जाते हुए को प्रेरयति इत्यादयः।
- ✓ णिजन्तात् प्रायः उभयपदस्य विधानं भवति।

❖ णिच्-प्रत्यय-विधायकं विधिसूत्रम्—

**सूत्रम्—** हेतुमति च (३,१.२६)

**अर्थः—** प्रयोजकव्यापारे= प्रेषणादौ वाच्ये धातोर्णिच् स्यात्।
भवन्तं प्रेरयति भावयति॥

हेतुः= हेतुसञ्ज्ञः/प्रयोजकः (आधारतया) अस्य अस्तीति हेतुमान्=व्यापारः, तस्मिन् हेतुमति= प्रयोजकनिष्ठे प्रेषणादिव्यापारे।

भू + णिच्
भौ + इ (अचो ञ्णिति)
भाव्+ इ (आवादेशः)
भावि (सनाद्यन्ता धातवः)

भावि + लँट्
भावि अ + ति
भावे अ + ति
भाव् अय् अ + ति
भावयति

1.प्रेषणादौ इत्यत्र आदि शब्देन 2.अध्येषणा 3.अनुमतिः 4.अनुग्रहः 5.उपदेशः, इति पञ्चानां ग्रहणं भवति। वस्तुतः पञ्चसु प्रवर्तनात्वमस्ति, अतः पृथग्ग्रहणं प्रपञ्चार्थमिति तत्त्वबोधिन्यां द्रष्टव्यम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः



❖ इकार-विधायकं विधिसूत्रम्—

**सूत्रम्**— ओः पुयण्ज्यपरे (७,४.८०)

**अर्थः**— सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः॥

अबीभवत्॥

अङ्गसञ्ज्ञकस्य अभ्यास-उकारस्य

इ

1. पवर्गः— प् फ् ब् भ् म्
2. यण्— य् व् र् ल्
3. ज्

अ

भू + इ (णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये।)

अ भू भू इ च्लिँ + त्

अ भू भू इ अ + त् (णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्)

अ बु भौ इ अ + त्

अ बु भाव् इ अ + त्

अ बु भव् इ अ + त् (णौ चङ्युपधाया ह्रस्वः)

अबुभव् अ + त् (णेरनिटि)

सन्वद्भावे कृते सति—

अबिभव् अ + त् (ओः पुयण्ज्यपरे )

अबीभव् अ + त्(दीर्घो लघोः)

अबीभवत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आकारान्तधातुषु ‘स्था’ धातोः प्रक्रिया



- ष्ठा गतिनिवृत्तौ॥

❖ पुँक्-आगमविधायकं विधिसूत्रम्—

सूत्रम्— अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुङ् णौ (७,३.३६)

अर्थः— ऋ-ह्री-व्ली-री-क्नूय्-क्ष्माय्-आकारान्तानां चाङ्गानां पुँक्-आगमो भवति, णौ परतः। स्थापयति॥

❖ इकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— तिष्ठतेरित् (७,४.५)

अर्थः—उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्॥

निमित्तापाये नैमित्तिकस्याप्यपायः।

स्था + णिच्
स्था प् + इ
स्थापि

स्थापि + लँट्
स्थापि अ + ति
स्थापे अ + ति
स्थाप् अय् अ + ति
स्थापयति

मोहनः तिष्ठति।

तिष्ठन्तं (मोहनं) गोविन्दः प्रेरयति।

गोविन्दः मोहनं स्थापयति।

स्थापि अ + त्
स्थाप् अ + त् (णेरनिटि)
स्थिप् अ + त्

स्थिप् स्थिप् अ + त्
ति स्थिप् अ + त्
अति ष्ठिप् अ + त्= अतिष्ठिपत्

संस्कृतसारः
छिन्वन्ते सर्वसंशयाः

# मित्-धातुषु ‘घट्-ज्ञप्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते ण्यन्तप्रक्रिया)

❑ घटँ चेष्टायाम्॥

❑ ह्रस्व-विधायकं विधिसूत्रम्—

सूत्रम्— मितां ह्रस्वः (६,४.९२)

अर्थः—घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ। घटयति॥

❑ ज्ञप ज्ञाने ज्ञापने च॥

ज्ञपयति। अजिज्ञपत्॥

॥ इति ण्यन्तप्रक्रिया॥

घट् + णिच्
घाट्+इ (अत उपधायाः)
घट्+इ (मितां ह्रस्वः)
घटि

घटि अ + ति
घटे अ + ति
घटे अय् अ + ति
घटयति

(स्वार्थिकः) (प्रेरणार्थकः)

ज्ञप् + णिच् + णिच्
ज्ञाप् +इ +इ (अत उपधायाः)
ज्ञाप् +इ (णेरनिटि)
ज्ञप् +इ (मितां ह्रस्वः)
ज्ञपि

ज्ञपि अ + त्
ज्ञप् अ + त् (णेरनिटि)
ज्ञप् ज्ञप् अ + त्

ज ज्ञप् अ + त्
जि ज्ञप् अ + त्
अजिज्ञपत्

# स्वार्थिक-प्रेरणार्थकयोः ण्यन्तप्रकरणयोः परीक्षणम्

**०१. एतेषु 'अदन्त'धातुः कः?**

क. चुरँ स्तेये

ख. कथ वाक्यप्रबन्धे

ग. घटँ चेष्टाययाम्

घ. ष्ठा गतिनिवृत्तौ

**०२. सत्याप-पाश-रूप............इति सूत्रं पूरयत—**

क. वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्ण-चूर्ण-चुरादिभ्यो णिच्॥

ख. वीणा-तूल-श्लोक-सेना- त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्॥

**ग. वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्॥**

घ. वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण- चुरादिभ्यो णिच्॥

**०३. सत्यापपाश.....इति सूत्रे चूर्णान्तप्रातिपदिकार्थानां ग्रहणं किमर्थम् ?**

क. प्रातिपदिकार्थम्

ख. धात्वर्थम्

ग. इष्टवद्भावार्थम्

**घ. प्रपञ्चार्थम्**

**०४. चुरादौ णिच्प्रत्ययः कस्मिन्नर्थे ?**

क. कर्त्रर्थे

ख. भावार्थे

**ग. प्रकृत्यर्थे**

घ. कर्मार्थे

**०५. णिचश्च इति सूत्रेण भवति—**

क. गुणः

ख. कर्तृगामिनि क्रियाफले आत्मनेपदविधानम् अन्यथा परस्मैपदम्।

ग. णिच्

घ. णिजन्तादात्मनेपदमेव

**०६. 'अचूचुरत' इत्यत्र एतेषु किं कार्यं न भवति ?**

क. हलादिशेषः

ख. णौ चङ्युपधाया ह्रस्वः

**ग. सन्यतः**

घ. णिश्रिद्रुस्रुभ्यः कर्तरि चङ्

**०७. कथ् + इ (णिच्) इत्यत्र किमर्थं नोपधावृद्धिः ?**

**क. थकारोत्तरवर्त्यकारस्य "अचः परस्मिन् पूर्वविधौ" इत्यनेन स्थानिवत्त्वात्।**

ख. ककारोत्तरवर्त्यकारस्य "अचः परस्मिन् पूर्वविधौ" इत्यनेन स्थानिवत्त्वात्।

ग. थकारोत्तरवर्त्यकारस्य "स्थानिवदादेशोऽनल्विधौ" इत्यनेन स्थानिवत्त्वात्।

घ. ककारोत्तरवर्त्यकारस्य "स्थानिवदादेशोऽनल्विधौ" इत्यनेन स्थानिवत्त्वात्।

**०८. 'अचकथत्' इत्यत्र दीर्घसन्वद्भावौ किमर्थं न भवतः?**

क. 'अचः परस्मिन् पूर्वविधौ' इत्यनेन स्थानिवत्वात्।

ख. अग्लोपित्वाभावात्।

**ग. अग्लोपित्वात्।**

घ. णिजन्तत्वात्।

**०९. 'गण'धातुः कस्मिन्नर्थे ?**

क. समूहे

ख. गणनायाम्

ग. कथने

घ. गमने

**१०. 'ई च गणः' इत्यत्र चकारेण कस्य ग्रहणम् ?**

क. अभ्यासस्य

ख. 'ई' इत्यस्य

ग. गणधातोः

**घ. अतः**

**११. कर्तृसञ्ज्ञाविषये इदं कथनं पूर्णतः सत्यमस्ति—**

क. यस्य कस्यापि कारकस्य कर्तृसञ्ज्ञा स्यात्।

ख. यः चेतनः क्रियां करोति तस्यैव कर्तृसञ्ज्ञा भवति।

ग. स्वतन्त्रस्य हेतुसञ्ज्ञकस्य कर्तृसञ्ज्ञा भवति।

**घ. पाकादिरूपायां क्रियायां स्वातन्त्र्येण विवक्षितार्थस्य कर्तृसञ्ज्ञा भवति।**

**१२. कर्त्तुः प्रयोजकस्य के सञ्ज्ञे भवतः ?**

क. करणसञ्ज्ञा कर्तृसञ्ज्ञा च

ख. करणसञ्ज्ञा कर्तृसञ्ज्ञा च

ग. हेतुसञ्ज्ञा करकसञ्ज्ञा च

**घ. हेतुसञ्ज्ञा कर्तृसञ्ज्ञा च**

**१३. 'हेतुमति' इत्यस्य कोऽर्थः?**

**क. प्रेषणादौ**

ख. हेतुसञ्ज्ञके

ग. कारणवति

घ. प्रेरणार्थकणिचि

**१४. भवन्तं प्रेरयति**—

क. भावयति

ख. भावयते

ग. पूर्वोक्तोभयम्

घ. भाव्यते

**१५. 'पिता बालेन मिष्टान्नं खादयति।' वाक्येऽस्मिन् प्रयोज्यकर्ता कः?**

क. पिता

ख. मिष्टान्नम्

ग. बालः

घ. कश्चिदन्यः

**१६. 'ओः पुयण्ज्यपरे' इति सूत्रार्थे इदमंशं नास्ति**—

क. अवर्णपरेषु पवर्गयण्जकारेषु परेष्वस्य प्रवृत्तिः।

ख. सनि परे।

**ग. अङ्गसञ्ज्ञकस्य तदवयवाभ्यासेकारस्य इत् स्यात्।**

घ. अङ्गसञ्ज्ञकस्य तदवयवाभ्यासोकारस्य इत् स्यात्।

**१७. भूधातोः लुँङि किं रूपम्?**

क. अभूभवत्

ख. अबुभवत्

ग. अबभवत्

**घ. अबीभवत्**

**१८. तिष्ठन्तं प्रेरयति**—

क. तिष्ठापयति।

ख. स्थापयति।

ग. उत्थापयति।

घ. ष्ठीवयते।

**१९. 'स्नापयति' इत्यत्र पुगागमः केन**—

क. तत्प्रयोजको हेतुश्च

ख. हेतुमति च

ग. ओः पुयण्ज्यपरे

**घ. अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुङ् णौ**

**२०. 'ष्ठा'धातोः लुँङि किं रूपम् ?**

**क.अतिष्ठिपत्**

ख.अजिज्ञपत्

ग. अतितिष्ठत्

घ. अत्यतिष्ठत्

**२१. प्रेरणार्थकेन णिचा कः कर्ता उक्तो भवति—**

क.प्रयोज्यकर्ता

ख.प्रयोजककर्ता

ग. हेत्वभिन्नकर्ता

घ. स्वतन्त्रकर्ता

**२२. घटन्तं प्रेरयति—**

क.घाटयति

ख.घटायते

**ग. घटयति**

घ. घट्टयति

**२३. ज्ञपादिषु कति धातवः सन्ति—**

क. ३

ख.४

ग. ५

**घ. ६**

**२४. चोरयन्तं प्रेरयति—**

क.चोरयति

ख.चोरयते

**ग. उपर्युक्तोभयम्**

घ. चोरायति

**२५.तिष्ठन्तं (मोहनं) गोविन्दः प्रेरयति—**

क.गोविन्दः मोहनेन स्थापयति।

ख.गोविन्देन मोहनः स्थापयति।

**ग. गोविन्दः मोहनं स्थापयति।**

घ. गोविन्दः मोहनं स्थाप्यति।